।। ओ३म् ।।

# अथर्ववेदे दर्शनं संस्कृतिश्च

गुरुकुल-कांगड़ी-विश्वविद्यालयस्य

## संस्कृतविभागे

पी-एच.डी. शोधोपाध्यर्थं
प्रस्तुता

### शोध-संक्षेपिका

निर्देशकः
डॉ0 महावीरोऽग्रवालः
आचार्यः संस्कृत विभागस्य
गुरुकुल-कांगड़ी-विश्वविद्यालयः
हरिद्वारम्

विभागाध्यक्षाः
प्रो0 वेदप्रकाश शास्त्रिणः
आचार्योपकुलपतयः
गुरुकुल-कांगडी-विश्वविद्यालयः
हरिद्वारम्





शोधार्थिनी
गिन्नी चौधरी

संस्कृतविभागः
गुरुकुल-कांगड़ी-विश्वविद्यालयः
हरिद्वारम् (उत्तराञ्चलम्)


2004

।। ओ३म् ।।

# अथर्ववेदे दर्शनं संस्कृतिश्च

गुरुकुल-कांगड़ी-विश्वविद्यालयस्य

## संस्कृतविभागे

पी-एच.डी. शोधोपाध्यर्थं
प्रस्तुता

### शोध-संक्षेपिका

निर्देशकः
डॉ0 महावीरोऽग्रवालः
आचार्यः संस्कृत विभागस्य
गुरुकुल-कांगड़ी-विश्वविद्यालयः
हरिद्वारम्

विभागाध्यक्षाः
प्रो0 वेदप्रकाश शास्त्रिणः
आचार्योपकुलपतयः
गुरुकुल-कांगडी-विश्वविद्यालयः
हरिद्वारम्





शोधार्थिनी
गिन्नी चौधरी



संस्कृतविभागः
गुरुकुल-कांगड़ी-विश्वविद्यालयः
हरिद्वारम् (उत्तराञ्चलम्)
2004

# अथर्ववेदे दर्शनं संस्कृतिश्च

शोधप्रबन्धेऽस्मिन् प्रथमे खण्डे पञ्चाध्यायाः तथा द्वितीये खण्डे चतुरध्यायाः सन्ति। तत्र प्रथमे अध्याये अथर्ववेदस्य स्वरूप–विषये सम्यक् रूपेणालोचना विहिता। स्वरूपप्रसङ्गे अथर्ववेदस्य काण्डानां परिचयः, सूक्तानां मन्त्राणाञ्च विचारः कृतः। अथर्ववेदस्य विभिन्न नाम विषयेऽपि वर्णनमस्ति। अथर्ववेदस्य शब्दस्य व्युत्पत्ति थर्व हिंसायां धातुतो भवति। थर्व धातो अ (नञ्) संलग्ने अर्थात् अथर्व हिंसा निषेधार्थवाची अहिंसस्य तथा अकुटिलता वर्तते इति। थर्व् गत्यार्थकोऽस्ति। थर्वन् इत्यस्यार्थो गतिशीलः, अ निषेधात्मक संलग्ने अस्यार्थे गतिहीनः, निश्चल, स्थिरश्च भवन्ति। अथर्वाक् शब्दतो हि अथर्वा–शब्दस्य निष्पत्तिर्जायते। गोपथ ब्रह्मणे तं प्रजापतिरित्युच्यते। "अथर्वा वै प्रजापतिः"। शतपथब्राह्मणे तं प्राणोवाऽअथर्वाः कथ्यते। अस्मिन् अध्याये अथर्ववेदस्य पठनविधिरस्ति। अपि च अङ्गिरसवेदः, अथर्वाङ्गिरसवेदः, ब्रह्मवेदः, भृगवंगिरीवेदः, छन्दोवेदः महीवेदः, क्षत्रवेदः, भैषज्यवेदः, इत्यादीनां परिचयः प्रदत्तः। अध्यायेऽस्मिन् वैदिकसाहित्ये अथर्ववेदस्य स्थानविषये विशद्वर्णनं वर्त्तते। तदन्तरमथर्व–वेदस्य काण्डविभाजनस्य प्रकरणमस्ति। तत्र काण्डविभाजने प्रथमभागे एक काण्डतः सप्तकाण्डपर्यन्त्, द्वितीयभागे अष्टकाण्डतो द्वादशकाण्डं यावत् तथा तृतीयभागे त्रयोदशकाण्डताऽष्टादशकाण्डंपर्यन्तं वर्णनं विहितम्।

अथ अथर्ववेदस्य शाखाविषये पर्यालोचना सञ्जाता। तत्र शाखा शब्दः शाखृ

(व्याप्तौ) ३० धातः अच् तथा टाप् प्रत्यययोगेन सम्पन्नोऽस्ति। यस्य शाब्दिकार्थे यत्—कस्य कार्यस्य भाग, उपभाग, सम्प्रदाय, पन्थ, परम्पराप्राप्त—वेदपाठप्रभृतयश्च। शाखाया निर्वचनं सायणेनोक्तम् शाखाः खशयाः। शक्नोतेर्वा अर्थात् एषा शाखा अस्मात् कारणात् अभिधीयते, यतो हि एषा आकाशे विश्रामं नयति अथवा एषा शक्धातुतः व्युत्पन्नां भवति। परम्परायामस्यां चतुर्वेदानां स्व भिन्न—भिन्न—शाखानां वर्णनं प्राप्नोति।

तदन्तरं अथर्ववेदस्य साहित्य—विषये वर्णनमस्ति। पुनः तत्र अथर्ववेदस्य ब्राह्मणमाराज्यकम्, उपनिषद् प्रातिशाख्य शिक्षा ग्रन्थ, प्रातिशाख्यसूत्रगंन्थ इत्यादीनां साङ्गोपाङ्ग—वर्णनं प्रतिपादितम्।

तदन्तरम् अथर्ववेदस्य पञ्चोपवेदानां विषये वर्णनं विद्यते। तत्र पञ्चोपवेदाः क्रमेण सर्पवेदः, पिशाचवेदः, असुरवेदः, इतिहासवेदः, पुराणवेदाश्च। सर्पवेदे सर्पार्णां भेदः, सर्पविषचिकित्साप्रभृतीनां वर्णनमस्ति। पिशाचवेदे पिशाचानां राक्षसानां वा विविधचेष्टानां वर्णनं विद्यते। असुरवेदे असुरान् यातुधान इति कथ्यते। एते यातु (जादू—टोना) प्रभृतिषु विश्वासमकुर्वन्। एतेषां विविधक्रिया—कलापानां वर्णनमस्ति। इतिहासवेदे प्राचीनाख्यानां राजवंशानां परिचयवृत्तयः सन्ति। शतपथब्राह्मणः इतिहासवेदे समुद्रविज्ञानमपि सम्मिलितमकरोत्। पुराणवेदे अत्र पुराणग्रन्थाः सन्ति तथा चात्र सृष्टेरूत्पत्तिः देवानामृषिणाञ्च वंशावली, मन्वन्तरवर्णनम्, सूर्य वंशिराज्ञानां चन्द्रवंशिराज्ञानाञ्च वर्णनं प्रभृतयः सन्ति। शतपथब्राह्मणः पुराणवेदे जन्तुविज्ञानस्यापि समावेशो कृतः। तस्मादनुमीयते यत् एतेषां पञ्चविद्यानां स्रोतः अथर्ववेदे विद्यमानोऽस्ति। तस्माद् अग्रे एताषां पञ्चविद्यानां प्रचलनमभवत्। पञ्चोपवेदेभ्यः केवलमितिहासः पुराणग्रन्थद्धयं प्राप्नोति। अवशेषा उपवेदा अप्राप्याः सन्ति।

एतदनन्तरं अथर्ववेदस्य भाष्यकाराणां विषये वर्णनं विद्यते। तत्र सायण, ग्रीफिथ, ह्वीटनि, ब्लूमफील्ड, ल्यूडविश, श्री श्रीपाद दामोदरसातवेलकर, श्रीजयदेव विद्यालङ्कार, क्षेमकरणदाशत्रिवेदीत्यादयः प्रमुखाः सन्ति। तदनन्तरं पैठिनसी स्मृतिविषये विचारोविद्यते।

अथ द्वितीये अध्याये ब्रह्मविषये वर्णनं प्रतिपादितम्। तत्र ब्रह्म शीर्षकान्तर्गते ब्रह्मणो विविधानि नामानि, ब्रह्मणः स्वरूपम् ब्रह्मणःकार्यम्, ब्रह्म–प्राप्ति–साधन प्रभृतीनां च समालोचना कृता। ब्रह्मण उपासना व्यापकशक्तिरूपेण संभूता। वैदिककवयः तद् ब्रह्म प्रति सामर्थ्यानुसारेणाद्वितीयसत्तारूपी–विश्वकर्मा, रोहित, सर्वाधारपुरुष, प्रजापति, आदित्यादिभिर्नामभिराह्वयन्ति स्म। ब्रह्मणे मूर्त्तामूर्तरूपद्वयं स्वीक्रियते। मूर्तशरीरमिन्द्रियप्राणादीन् स्वीक्रियत्। तदनन्तरं ब्रह्मस्वरूपं विषये वर्णनं विद्यते। ब्रह्मणो ब्रह्माण्डरूपमैकं चक्रं वर्तते। तस्य एको नाभिप्रदेशोऽर्थात् केन्द्रबिन्दुर्ब्रह्मोऽस्ति। तस्य रथस्य सहस्राणि अराणि सन्ति। अर्थात् संसारस्य नाना ज्योतयस्तस्य अराणि भवन्ति। चक्रोऽयं अरैः संलग्नं भूत्वा सम्मुखं, पश्यातभागं, उर्द्धवमधं च प्रतिगच्छति। ब्रह्म तस्य अर्द्धशक्ति बलेन सम्पूर्ण संसारमिदं सृजति। तस्य अर्द्धशक्तिरक्षातः अप्रकटो वा विध्यते। ब्रह्मणि नहि ध्युलोके नहि पृथिव्यामुपरि व्यवस्थितम्, अपितु उमयतो भिन्नभाश्यन्तर.य जायते। अस्यामिप्रायस्तु ब्रह्मनिर्लिप्रत्वादुभयतो भिन्नम्। तस्य सताबलेन वृक्षेषु वनस्पतिषु च जीवनशक्ति निहित जाता। ब्रह्म स्त्रीपुरुषयोरूभयरूपम्। एतद् पुल्लिङ्ग–स्त्रीलिङ्ग–नपुसकलिङ्गपि च वर्तन्ते। पुरुषरूपे अयं आत्मा ब्रह्मा वा कथ्यते। स्त्रीरूपक्रमेण तत्र शक्तिरित्युच्यते तथा नपुंसकरूपक्रमेण तद् ब्रह्माभिधीयते। यः चक्षुवान् अर्थात् ज्ञानी विद्यते स तद् ब्रह्म द्रष्टुं शक्यतेति।

तदन्तरं ब्रह्मणः कार्यं विद्यते। ब्रह्मणो बहुशक्तयः सन्ति। तस्याः शक्तेः फलस्वरूपं

तत् संसारस्य सृजनं, पालनं संहाटय करोति। तथा जीवात्मानाम् अनादिकर्मशङ्.खलानां न्यायबलेन तत्त्वकर्मफलं ददाति। ब्रह्म बहुकर्मफलानां व्यवस्थापकम्। तस्य कर्म महदेवं विलक्षणं विद्यते। वेदस्यादेशं यत् भो साधक! ब्रह्मणः सखित्वं (मित्रत्वं) प्राप्तुं तस्य कर्म व्रतं च पश्य। स परमात्मा सृष्टेः रचयिता विद्यते। सृष्टेः संरचनायाः पूर्वं परमेश्वरं हिरण्यगर्भस्य रूपमिति कथ्यते। यत् सूर्य विद्युदादिप्रकाशकानां प्रकाशकमधारञ्च। तत् महतत्त्वाहंकारादि एकविंशतिपदार्थानां निर्मिताऽस्ति। तद् ब्रह्म जीवात्मानां कर्मफलं प्रददाति। अथर्ववेदस्य षोडशकाण्डे चतुर्विधानां अध्यात्मिकक्लेशानां वर्णनं विहितम्। तथा तस्मात् क्लेशात् मुक्तिरपि ब्रह्मणः कार्यमिति उल्लेखितमस्ति। ते चत्वारः क्लेशाः—शरीरस्य जलनं, शरीरस्य समस्तदोषाः, मनसो नाशको भावस्तथा आत्मघातकः समस्तविचार प्रभृतयः सन्ति।

तदनन्तरं ब्रह्मप्राप्तिसाधना विषये चर्चा पर्यालोचिता। ब्रह्म नाम महदात्मतत्वम्। यत् सर्वत्र परिव्याप्यते। यत् सर्वत्र प्रकाशितं भवति। यस्य शक्तिबलेन सम्पूर्ण संसारं सुन्दर रूपं प्राप्तुमिति। सत्यहिंसायाऽपि ब्रह्मप्राप्तेः साधनामिति सर्वविदितम्। जीवात्मा पञ्च तत्त्वानुपभोग्यते, अतः पञ्चौदनमित्युच्यते।

अथ तृतीये अध्याये आत्मन् विषये विशद्वर्णनं वर्त्तते। तत्र आत्मनः स्वरूपं, आत्मनः कार्यम्, जीवात्मा—परत्मनोर्भेदः, जीवस्य स्वभावः, कर्मणः कर्त्ताफलस्य च भोक्ता इत्यादीनां विषये वर्णनं जातम। तत्र आत्मनः वर्णनप्रसङ्गे कथितमस्ति यत् अथर्ववेदे बहुषु सूक्तेषु आत्मनो वर्णनं जायते। अतः स्पष्टमनु भीयते यत वैदिक ऋषि मानवशरीरस्य

सञ्चालक रूपे एकां पृथकसत्तां स्वीक्रियिते। तत् चेतन तत्त्व हि आत्मा। तस्य अस्तित्वं शरीरविनष्टेऽपि स जीवति। आत्मा प्रगतिकारी जायते। तस्याग्रसरस्य स्वभावो विद्यते तथा दुष्टतां दूरमपसरति। गीतायां भगवन् श्रीकृष्णो मोहग्रस्तमर्ज्जुनं प्रति आत्मविषयकमुपदेशं ददाति। आत्मा सदा अजरामरश्च। यथैव मानवः स्व वस्त्रं विहायति तथैवात्मा शरीरम्। कदापि केनाप्यस्त्रेण मृतो न जायते। अथर्ववेदे हि विदितम्—त्वं (आत्मा) बलवान् असि। त्वं तेजः आत्मिकबलयुक्तः, त्वं आत्मा स्वयं प्रकाशरूपी च। अतस्त्वं मानवसदृशोऽग्रसर भव तथा मुक्तिञ्च लभ। आत्मा तेजस्वी विद्यते अर्थात् अन्येषां कृते प्रकाशं प्रयच्छति। एष आत्मिकबलयुक्तो भवति। स्वयं ज्योतिरस्ति। प्रकाशः स्वरूपश्च। एष आत्मा ज्ञानी, पुरुषार्थी, प्रयत्नशील प्रभावशाली, स्वयं ज्योतिवान, बलवान् शरीर—रक्षकस्य विद्यते।

एतदनन्तरं आत्मनः नामानि प्रदत्तानि। ततः परं आत्मनः स्वरूपविषये विचारः प्रस्तुतः। तत्र आत्माऽमरत्व लभते तथा अत्मज्ञानी पुरुषो हि अमरतां लब्धुं पारयति। परन्तु अद्यन्तनो भौतिकवादी मानवः स्वशरीरं सर्वं मन्यते। अथर्ववेदे आत्माविषये कथनमस्ति यत् शरीरस्य यानि—यानि चिह्नानि निर्दिशितानि तानि जीवितशरीरे दृष्टिगोचरं जायन्ते। न तु मृत्यु समये। एताषां क्रियाणां सतां आत्मानं बिना नैव सम्भवति। परन्तु आत्मा एतान् विनाऽपि तिष्टति। एवामात्मा न तु शरीरं नहि इन्द्रियम्। ततः आत्मनः कार्यमुपरि वर्णनं वर्त्तते। अपि च जीवात्म—परमात्मनो र्भेदविषये वर्णनमस्ति। तत्र आत्मानं जीवात्मा परमात्मारूपी विभक्तद्वयस्य सादृश्यं वृक्षासिनपक्षीद्वयेन सह कृतम्। अथर्ववेदे आलङ्कारिकवर्णनप्रसङ्गे जीवात्मा—परमात्मनोः सुपर्ण—पक्षिणः कल्पना कृता। सुपर्णद्वयमर्थात् उत्तमपंखयुक्तपक्षीद्वयं यत् परस्पर—संयुक्तं मित्रञ्च। समानरूपेण एकस्मिन् वृक्षे वसतः। यदि एकः स्वादुपलान्

खादति तर्हि अपरो न खादित्वा केवलं पश्यति। स साक्षीरूपेण पश्यति। सायणेन 'सुपर्णौ' शब्दस्यार्थः क्षेत्रज्ञपरमात्मनौ अर्थाद् जीवात्मा तथा परमात्मा इत्यर्थः कृतः। वृक्षं शरीरस्य वाचकरूपेण स्वीक्रियते।

एतदन्तरम् जीवस्य स्वभावविषये वर्णनमस्ति। ततः परं कर्मणः कर्त्ता फलस्य च भोक्ता–विषये सातिशय–आलोचना निहिताः।

अथ चतुर्थे अध्याये मोक्षविषयमधिकृत्य मोक्षस्य स्वरूपं, बन्धनस्य हेतुः, मोक्षस्य कारणम्, मोक्षस्योपाय, मुक्तस्यस्थितीत्यादि–विषये वर्णनं विद्यते। तत्र मोक्ष शब्दः 'मुच' विमोचने–धातुतो निष्पद्यते। यस्यार्थः (मुक्तिर्लभः)। मुक्तिर्लभः कस्मात् इति जिज्ञासायामुच्यते यत् केवलं दुःखादेव। समस्त भौतिकजगत् परिणाम, ताप, संस्कारादि दुःखयुक्तं भवन्ति। अस्य दुःखस्य दैहिक, दैविक, भौतिकादिसंज्ञया अभिहितं जायते। अथ त्रिविधदुःखस्य सात्यन्तनाशो हि सांख्यदर्शने अन्तिमे पुरुषार्थ इत्युच्यते (अन्तिमः पुरुषार्थो मोक्षो हि विद्यते।

एतदन्तरम् मोक्षस्य–स्वरूप विषये आलोचना–प्रसङ्गे महर्षि दयानन्दसरस्वतीकृतस्य मन्त्रस्य भावार्थे एवमस्ति यत् यः परमेश्वरे वेदमाध्यमेन निर्देशित आज्ञानुकूलं चलन्ति ते मोक्षसुखं लभन्ते। यथैव सामान्यजनो बन्धु मित्रं वा सम्प्राप्य सहायतां प्राप्नोति अथवा तृष्णार्त्तजनो मधुरजलपूर्णकूपं लब्ध्वा पूर्णमानन्दलभते अपि चास्मिनध्याये बन्धनस्य हेतोः विषये कारणविषये च वर्णनप्रसङ्गे तत्र आचार्यशंकरेण जन्ममरणरूपी बन्धनस्य कारणमज्ञानम् इति स्वीक्रियते। योगदर्शने अपि एवम् उच्यते यत् अविद्या हि समस्त क्लेशानां मूलकारणम्।

ततः परं मोक्षस्योपायविषयस्य वर्णनप्रसङ्गे यस्तेजस्वी पुरुषः स्व मनसा चक्षुभ्याञ्च बद्धस्थितौ तिष्ठन् प्राणिनामनुकम्पादृष्ट्या पश्यति, तान् प्रति विश्वनिर्माणकारी प्रजारमणकारी च प्रकाशमयो देवः सर्वादौ मुक्ति कारयति। गीतायां श्रीकृष्णोऽपि स्वशब्देन कथयति—य इन्द्रियाणि मनसा वशीकृत्य कर्मेन्द्रियमाध्यमेन संपूर्ण कार्यं करोति स नैष्कर्मवान् भवति। अत्र विश्वस्य समस्तैन्द्रियाणां चैकरूपतावर्णनं कृत्वा बीजरूपस्य मोक्षतत्त्वस्य दर्शनं जायते।

ततः परं मुक्तस्य स्थितिर्विषये वर्णनप्रसङ्गे वर्णितमस्तियत् बन्धनाद् मुक्तवा जीव आनन्दं विदधति। यदा हृदयस्थो भावना विनष्यति तदा मनुष्योऽमरत्वं प्राप्नोति तथा तं ब्रह्मत्वप्राप्तिर्जायते। ब्रह्मवित् साक्षात् ब्रह्ममयो हि विद्यते। तस्मात् स्थानात् स पुनः प्रत्यावर्त्तनं न करोति। आत्मनो ब्रह्मणश्चैकरूपता हि मोक्षत्वं प्राप्यते। ब्रह्मज्ञानं सम्प्राप्य साधकोऽमरत्वं लभते।

एतदन्तरं पंचमे अध्याये कर्म—पुनर्जन्मविषये च वर्णनं विद्यते। कर्मप्रसङ्गे तत्र सम्पूर्णशरीरस्याधिपती राजाऽऽत्मा भवति तथा देवो मनस्तस्य प्रधानमंत्री विद्यते। आत्मा शरीरस्य हृदयदेशे तिष्ठन् कर्मफलानुसारेण सुखदःखयो भोगार्थ भोग्यसंसारेणं सम्बन्धयति। अपि च एतत् सम्बन्धनार्थ स्व निकटवर्ती देवस्य मनसः सहयोगं नयति। सर्वेषु कर्मसु कर्त्ता एकैव जीवोऽस्ति यत् तस्य फलं प्राप्नोति। अतएव दुःखस्य भोगोऽभोगो वा जीवस्याधीने वर्तते। ततः परं जीवन—मृत्युप्रसङ्गे वर्णनमस्ति यत् जन्ममृत्युश्च सानिध्येनोभै चलतः। यः प्रादुर्भवति स अवश्यं मरिष्यति। मनुषस्य कर्त्तव्यस्तु स स्वास्थ्य नियमान् परिपालयन्

आयुवर्धक विधिना तिष्ठेत् यतो हि तस्यासमये मृत्युर्न भवति। ज्येष्ठस्याग्रे कनिष्ठस्य मृत्युः न भवेत्। अस्मात् ज्ञायते यत् ज्येष्ठस्याग्रे कनिष्ठस्य मृत्युरशुभ इति। ततः परं सकामनिष्कामकर्मविषये शुभाशुभकर्मविषये, पुनर्जन्मविषये पुनर्जन्महेतोर्विषये चालोचना सञ्जाता। प्रसंगेऽस्मिन् शरीरं तु पञ्चभूतेभ्यो निर्मितं वर्तते, यदा मूलामिदं भस्मीभूतशरीराद् आत्मतत्वं निःसरति तदा स पुनः पृथिवीं जलदिततत्त्वान् प्राप्नोति। तत्पश्चात् स आत्मा पुनो नूतनशरीरं धारयति मातागर्भेषु प्रविशति तथा पुनर्प्रकाश्य संसारे विचरति। मृतमनुष्यानां जीवो वास्तविक–रीत्याऽमरो विद्यते, स स्वसामर्थ्येन कार्यं करोति। शरीरस्यास्य त्यागानन्तरं भिन्नमर्त्यदेहेन सह संयुक्तं भवति। यो हि उत्तमरूपे जीवितमासीत्, सोऽय म्रियते। शरीरं मरिष्यति परन्तु तस्याधिष्ठाता कदा न म्रियते। स विधुरस्ति। शरीरं पुनः ग्रहण कृत्वाऽऽत्मा विविधकर्मसु प्रवृत्तो जायते।

अथ द्विती शोधप्रबन्धस्य विषयविभाजनस्य द्वितीये भागे सांस्कृतिक विवेचनस्य समीक्षा वर्तते। तत्र प्रथमे अध्याये वर्णव्यवस्थायाः वर्णनक्रमे ब्राह्मण, क्षत्रिय, वैश्य, शूद्र इत्यादिनाम् आलोचना विस्तृतरूपे विद्यते। वेदाः आदर्शसमाजनिर्माणस्य प्रतीकाः भवन्ति। वेदेषु एतादृशि समाजव्यवस्था वर्तते यासु व्यवस्थासु सर्वेजनाः मिलित्वा गच्छन्ति तत्र वेदे वर्णनमस्ति–

अनुव्रतः पितुः पुत्रो माता भवतु संमनाः।

जाया पत्ये मधुमतीं वाचं वदतु शांतिवाम्।।

किञ्च –

प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु। प्रियं सर्वस्व पश्यत् उत शुद्र उतार्ये।।

तदनन्तरम् ब्राह्मणस्य वर्णनप्रसंगे कथितमस्ति ब्राह्मणाः वैदिकाः भवेयुः। ब्राह्मणस्य गुण कर्तव्योः निम्नप्रकारेण ज्ञातुम् शक्यते यत् ऋग्वेदस्यानुसोरण बृहस्पतिः परमात्मनः प्रेरणया ऋषीनामन्तःकरणे वेदस्य प्रकाशयं कृतवान्। सहैवैतद् वर्णनमस्ति यत् ये बुद्धिमन्तः परिश्रमिणश्च जनाः भवन्ति तेऽस्मिन् वेदज्ञाने पारंगताः भवन्ति। अपि चैताद्दशाः येन भवन्ति ते वस्तुतः वैदिकाः न भवन्ति। मनीषीभिः ब्राह्मणैः वेदविषयाणां विचाराय सभाः क्रियन्ते। येऽधिकाः विद्यावन्तः वेदे चोहापोह करिष्यमाणः विद्वांसः भवन्ति ते विचारस्य प्रत्येकस्मिन् क्षेत्रे यथेष्टं विचरन्ति। ये एतादृशाः न भवन्ति तेऽनुगमनं कुर्वन्ति अतः ब्राह्मणः ब्राह्मणो भवति। अपि च अध्यायेऽस्मिन् ब्राह्मणानां पाण्डित्यविषये, तपस्विन् विषये, स्वस्तिबुद्धिविषये, तेजस्विन् विषये, शरीराणां बलयुक्तविषये सरलस्वभावयुक्त विषये, अहिंसा परायणविषये च आलोचना विहिता।

ततः परं क्षत्रियस्य वर्णनप्रसंगे लिखितमस्ति यत् अथर्ववेदे क्षत्रियस्य कृते क्षत्र–क्षत्रिय राजन्य–शब्दानां च प्रयोगः संजातः। क्षत्रियस्य कर्तव्यानां वर्णन कुर्वन् कथनमस्ति यत् सः राष्ट्रस्य श्रीवृद्धिमिच्छति। आन्तरिकद्वन्द्वं निवारयति। यज्ञप्रियो भवति। प्रजाजनानामभीष्ट–पूर्तिं करोति। प्रजाजनाञ्च दीर्घमायुष्मान् भवति। सः शूरवीरः भवति। युद्धं गच्छति तत्र गत्वा वीरगतिञ्चाप्नोति, क्षत्रियः राष्ट्ररक्षको भवति। राष्ट्ररक्षा तस्य परमलक्ष्यमस्ति। सः विद्वान् भवति। सः यज्ञेन दीर्घायुः भवति। अपि च अथर्ववेदेन ज्ञायते यत् ब्राह्मणाः क्षत्रियात् श्रेष्ठा

भवन्ति। अतएव कथ्यते यत् क्षत्रियः ब्राह्मणाय कष्टं न ददातु तथा तस्य गोः धनादेश्चापहरणं न कुर्यात्। ऋग्वेदेऽनेकेषु स्थलेषु मित्र–वरुण–अर्यमा–इन्द्र–रुद्र–प्राण–भग–अंशादयः देवान् आदित्यः क्षत्रियश्चकथनमासीत् अनेनैषां देवानां यान् गुणान् कर्तव्यानि च वर्णनम् अनेकस्थलेषु उपलभ्यते ते सर्वे गुणः क्षत्रियाणाञ्च भवन्ति।

ततः परं प्रसङ्गेस्मिन् श्रीस्वामिदयानन्दस्य विचारः प्रकटितः। तस्य विरचितस्य सत्यार्थप्रकाशस्य वैदिकशास्त्राणामाधारे क्षत्रियाणां गुणानां वर्णनं वर्तते। तदनन्तरं वैश्यस्य वर्णनक्रमेण ऐतरेयब्राह्मणग्रन्थे वैश्यस्य सामाजिकास्थितेः वर्णनं सम्पादितम्।

एतदनन्तरं शूद्रस्य वर्णनमस्ति। अथर्ववेदे सप्तवारं शूद्रशब्दस्योल्लेखो भवति। शूद्रणां कर्मसेवावृत्तिरस्ति। ब्राह्मण–क्षत्रिय–वैश्य त्रयवर्णानां सम्बोधनम् आर्य शब्देन भूयते। शूद्रं हीनवृत्तिना पृथक् इति कथ्यते।

अथ द्वितीयभागस्य द्वितीये अध्याये आश्रमव्यवस्थायाः वर्णनक्रमे तत्र ब्रह्मचर्याश्रमः, गृहास्थाश्रमः, वानप्रस्थाश्रमः, संन्यासाश्रमश्चेत्यादीनां विशदरूपे पर्यालोचना समीक्षा च वर्तते। अस्मिन् प्रसङ्गे स्वामिदयानन्दस्यापि मतानाम् उल्लेखो विहितः।

ततः परं तृतीये अध्याये धार्मिकजीवनस्य विषये वर्णनक्रमे पञ्चमहायज्ञस्य विचारः कृतः। ते यथा ब्रह्मयज्ञं, देवयज्ञं, पितृयज्ञं, बलिवैश्यदेवयज्ञं, अतिथियज्ञञ्च। तदनन्तरं हव्यद्रव्याणिविषये, देवमण्डलविषये, देवतानां संख्याविषये च वर्णनमस्ति। देवानां संख्या क्रमेण पृथिवीस्थानीयानां देवातानां, द्युस्थानीयानां देवतानां अन्तरिक्षस्थानीयानां देवतानां च

वर्णनं विद्यते। अस्मिन् अध्याये हि षोडशसंस्काराणां वर्णनमपि कृतम्। षोडशसंस्कारप्रसङ्गे प्राग्जन्मसंस्कारः बाल्यावस्थासंस्कारः, अन्यसंस्कार इत्यादीनां च विचारः प्रस्तुतः।

अथ चतुर्थे अध्याये कलात्मकजीवनस्य प्रसङ्गक्रमे काव्यकला, संगीतकला, नृत्यकला, वास्तुकला इत्यादीनां वर्णनमस्ति। कलात्मकवर्णनक्रमेण तत्र लिखितमस्ति यत्—मनुष्ये सौन्दर्योपासनायाः प्रवृत्तिरनादि वर्तते। मानवसंस्कृतेः सभ्यतायाश्च विकासे कलायाः अत्यधिकं योगदानमस्ति। संस्कृत्यां सत्यम्, शिवम्, सुन्दरमित्यादीनामाधानं कलायाः योगेन भवति। काव्यकलावर्णनप्रसङ्गे तत्र अथर्ववेदस्याध्ययेन ज्ञायते यत् उच्चकोटेः काव्यस्य समस्तगुणाः विद्यमानाः सन्ति। काव्ये भावसौन्दर्यम्, अर्थगौरवम्, उच्च कल्पनादीनां, रसः, छन्दः, अलंकारादीनां सर्वेषां तत्त्वानां प्रचुरमात्रायां समावेशः अस्ति।

सर्वप्रथमे काव्यकर्ता ईश्वरं प्रणमस्ति। अग्निं चापि क्रान्तदर्शी मत्वा तं काव्यरक्षार्थं प्रार्थना कृता। अपि च रसनिरूपणे श्रृंगाररसः, वीररसः, अद्‌भुतरसः, भयानकरसः, रौद्ररसः, वीभत्सश्चेत्यादीनां रसानां प्रयोगः कृतः। तत्रालंकाराणां प्रयोगे अथर्ववेदे प्रमुखानाम् अलंकाराणां वर्णनमस्ति।

ततः परं संगीतकलायाः वर्णनं वर्तते। अर्थशास्त्रं संगीतशास्त्रस्यान्तर्गते, नृत्यं, गीतं, वाद्यम् अभिनयं च मन्यते। एतेषां चतुर्णाम् अंगानां पूर्तिहेतोः संगीतपूर्णं मन्यते इति। अथर्ववेदे नृत्य, गीत—वाद्यादीनाञ्चोल्लेखः प्राप्नोति। केवलमेकस्मिन् स्थाने अभिनयस्य संकेतो दृश्यते। ततः नृत्यकलायाः वर्णनं प्रतिपादितम्। भावाभिनयं नृत्यं कथयन्ति तथा च केवलम् अङ्गसंचालनं नृतम्। वेदेषु उभयप्रकारस्य नृत्यस्योल्लेखोऽस्ति। नर्तकस्य कृते

नृतु–शब्दोऽस्ति। नृत्ये विविध–रूप–धारणस्य तुलना मयूर, गंधर्व, अप्सराभिश्च सह निहिता अस्ति। नृत्येन सह संगीतवाद्यस्यापि संगतिर्भवति।

नृत्यस्य कार्य प्रायः सूताः (सारथयः) कुर्वन्ति स्म। वास्तुकला वर्णनप्रसङ्गे उल्लिखितमस्ति यत्– अथर्ववेदे वास्तुकलासम्बन्धी पर्याप्ताः सामग्रयः प्राप्यन्ते। अथर्ववेदे वास्तुशास्त्रस्य आधारेण एव गृहनिर्माणस्योल्लेखो वर्तते।

अथोपसंहाररूपे स्त्री–जीवनविषये वर्णनं विद्यते वेदेषुनारीणां बहु–आदरणीयं स्थानं वर्तते। सा पुरुषस्य सहयोगिनी सहायिका च वर्तते। ''जायेदस्तम् (ऋ. ३/५३/४) स्त्री' हि गृहमिच्युच्यते। विवाहानन्तरं तां पति–गृहे गृहपत्न्याः गृहस्वामिन्या अधिकारो लभ्यते। स्त्री सहधर्मिणी भवति। ताम् अर्धाङ्गिनी कथयन्ति। पत्नीं विना यज्ञः अपूर्णो मन्यते।

अनेन प्रकारेण संक्षेपेण मम शोधप्रबन्धस्य इयं सारसंक्षेपिका प्रस्तुता कृता।